Digitized by eGangotri Trust

# KALIDASA PRATIBHA

*A Symposium in Samskrit*
*on*
KALIDASA'S GENIUS

To Dr & Mrs
Satya Vrat
Raghavan

HELD ON
## KALIDASA DAY
(25-10-'55)

The Samskrita Academy,
...mskrit College Buildings,
...ADRAS-4.

CC-0. Prof. Satya Vrat Shastri Collection.

*Price Re. 1.*

Digitized by eGangotri Trust

# कालिदासप्रतिभा

*A Symposium in Samskrit*

*on*

KALIDASA'S GENIUS

HELD ON

## KALIDASA DAY

(25-10-'55)

The Samskrita Academy,

**The Madras Samskrit College Buildings,**

**MADRAS-4.**

*1955* *Price Re. 1.*

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

भारतीभागधेयस्य

कालिदासमहाकवेः ।

अर्पितः पदयोर्हृद्यः

पद्यरूपस्सुमांजलिः ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

# प्रस्तावना

अष्टाविंशतेर्वर्षेभ्यः पूर्वं प्रतिष्ठापितेयं संस्कृतसेवासमितिः संस्कृतवाणीप्रणयिनः समानपि समानाय्य सुरभारतीसेवामाचरन्ती वर्तत इति विदितमेव। वाल्मीकिव्यासादीनां महाकवीनां महोत्सवं च प्रवर्त्य धन्यतामात्मन आविष्कुर्वाणा चास्ते ॥

तत्र च भारतदेशप्रतिभारूपस्य कालिदासस्य महोत्सवो नवरात्रमहान्ते निर्वर्त्यते प्रतिहायनं विद्वद्भिर्विरचितैस्तत्काव्यार्थपरिशीलनोपन्यसनैः, तन्नाटकदृश्यप्रदर्शनैः, तत्काव्योद्धृतश्लोकपठनैश्च सङ्गीतानुरञ्जितैः। अस्मिंस्तु संवत्सरे कश्चन प्रकारविशेष उत्सवस्योपादृतः यत् तादृशसरसपद्यनिर्मातुः कवेस्समित्याः कृतज्ञताविष्करणं तत्प्रतिभाप्रकाशकपद्यसुमाञ्जलिसमर्पणेनैव कार्यमिति ॥

बहवश्च विपश्चितः प्रार्थिताः स्वपद्यमालाः समर्पितवन्तः। सन्ति चास्मिन् पत्रसमुद्गके विमर्दसहाः केसरमालिकाः, मधुदानविशारदाः कुरवकाः, स्मरदीपना अशोकाः, तिलकनिभास्तिलकाः, कनककान्तयः कर्णिकाराः, सुन्दरीवदनसुन्दरं तामरसम्, सद्योविकसिता तरुचारुविलासिनी नवमल्लिका, सुरभिलाः पाटलाः, नखक्षतप्रतीकाशाः किंशुकाश्च। नूनमयं मञ्जरीसमुदयः सहृदयस्वान्तनन्दनो भविष्यति।

ये कालिदासचरणार्पणायेमं पुष्पाञ्जलिमुपहृतवन्तः, उपकृतवन्तश्च समितिं, तेभ्यः कविभ्यः कृतज्ञतानिवेदनपुरस्सरं शिवमनुध्यायति

**संस्कृतसेवासमितिः ॥**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

*Names of scholars whose compositions are printed in this booklet.*


| | | Page |
|---|---|---|
| 1. | Sri R. Appannachar | .. 1 |
| 2. | Sri K. Balasubrahmanya Sastri | ... 2 |
| 3. | Sri M. Duraiswami Ayyangar | ... 4 |
| 4. | Dr. B. Ch. Chhabra | ... 7 |
| 5. | Sri Kasi Krishnacharya | ... 8 |
| 6. | Sri K. S. Krishnamurti Sastri | ... 10 |
| 7. | Sri K. S. Nagarajan | ... 12 |
| 8. | Sri R. Narayanaswami | .. 14 |
| 9. | Sri V. A. Ramaswami Sastri | .. 15 |
| 10. | Dr. V. Raghavan | ... 17 |
| 11. | Sri P. Raghavacharya | ... 21 |
| 12. | Sri P. Ramadoss | .. 22 |
| 13. | Sri K. Ramamurti Sastri | .. 23 |
| 14. | Sri P. S. Rama Sastri | .. 24 |
| 15. | Sri K. L. V. Sastri | .. 26 |
| 16. | Sri B. L. Shanbogue | ... 27 |
| 17. | Sri V. H. Subrahmanya Sastri | .. 28 |
| 18. | Sri S. Subrahmanya Sastri | .. 29 |
| 19. | Sri T. Sundaracharya | .. 30 |
| 20. | Sri D. T. Tatacharya | .. 32 |
| 21. | Sri S. T. G. Varadacharya | .. 33 |
| 22. | Sri A. Venkatacharya | .. 35 |
| 23. | Sri V. S. Venkata Raghavacharya | .. 36 |
| 24. | Dr. G. V. Sitapati | .. 39 |
| 25. | Sri B. K. Srinivasacharyulu | ... 40 |
| 26. | Sri T. Chandrasekharan | ... 41 |
| 27. | Sri M. P. Saralaya | .. 42 |
| 28. | Sri Vidyadhara Sastri | .. 42 |


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

# कालिदासप्रतिभा

—:*:—

## नवरत्नमालिका

R. APPANNACHAR, B. A, B. T., *Kumbhakonam*

योऽन्तः प्रविश्य तव वाचमिमां प्रसुप्तां
सञ्जीवयत्यखिलशक्तिधरः स्म धाम्ना ।
श्रीकालिदास ! यदनुग्रहतोऽसि वन्द्य-
स्तस्मै नमो भगवते कृतिने च तुभ्यम् ॥ १ ॥

नाहं क्षमः स्तुतिविधौ हि तवोडुपेन
मोहात्तितीर्षुरिव दुस्तरसागराम्बु ।
कर्तव्यतामनुविचिन्त्य यते तथापि
श्लोकं तवैव ततवान्न कवित्वदर्पात् ॥ २ ॥

शृङ्गार एव रसराज इति प्रसिद्धो
वैदर्भमार्ग इव मार्गपरंपरासु ।
काव्यश्रियो मणिरलंकृतिषूपमैव
ते च त्वया त्वमपि तैरभवः कृतार्थः ॥ ३ ॥

कान्तोपदेशरुचिरा तव वाक् च पथ्या
धर्मो हि काव्यभुवि ते भवतोऽर्थकामौ ।
प्रेम्णा हृतार्धतनुरप्युमयाऽद्य पूर्वं
क्रीतः कठोरतपसैव हि चन्द्रमौलिः ॥ ४ ॥

धर्म्यं दिलीपमजमिन्दुमतीगतासुं
सीताविवासनपटुं च नृपं कृपालुम् ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

सृष्ट्वाऽऽत्मघातकविलासिनमग्निवर्णं
शिक्षां तृतीयपुरुषार्थगतां व्यतानीः ॥ ५ ॥

'दृष्ट्वा मुमोह लघु काञ्चन काञ्चनाङ्गीं
वन्यामुवाह बहुदारवरोऽपि कन्याम् ।'
लोकापवादमिति पौरवगं प्रमृज्य
दुर्वाससो हि कथया कविरत्नमास्से ॥ ६ ॥

पात्रानुकूलमुपमां समयानुसारं
सर्वस्य चानुभवगं बहुशास्त्रसारम् ।
कृत्वा भवान् भवति सत्कविसार्वभौम-
श्चित्रार्पितादिविरुदाविह तत्प्रमाणम् ॥७॥

गाहन्तामिति सुश्लोकं श्लोकेनैकेन लब्धवान् ।
वैदर्भरीत्या यत्तत्र गुणा हि दश दर्शिताः ॥ ८ ॥

इति श्रीकालिदासस्य काव्यश्रीर्लेशतः स्तुता ।
अप्पण्णाचार्यकविना भूयाद्रसिकरञ्जनी ॥ ९ ॥

---

## श्रीकालिदासदशकम्

K. BALASUBRAHMANYA SASTRI,
*Principal, Madras Sanskrit Callege, Madras*

ईशस्थाणुपदद्वयं यदभिधारूपं ह्यनन्याश्रितं
यस्मिँल्लोकविरुद्धमप्यवगतं ह्यर्थत्रयं साधनम् ।
सन्मार्गावगमाय दारसुतवित्तेच्छाप्रहाणात्मकं
तद्भक्तः शिवमातनोतु नितरां काल्याश्रितः शैवराट् ॥ १ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


वेदान्तेष्वितिपद्य आह विशदं पादैश्चतुर्भिः स्वयं
तैर्दम्पर्यमविप्रतीतमथ सामग्रीं फलञ्च क्रमात् ।
योगं भक्तिमपि स्थिरां स्थिरतरे निश्श्रेयसप्रापणीं
सोऽयं नो मतिमातनोतु कविराट् व्यासोक्तसंग्राहकः ॥ २ ॥

भोग्यं पञ्चविधं जलाग्निकुखवाय्वन्तः प्रविश्यास्ति यो
भान्तं यं ह्यनुभाति सूर्य उडुराट् जीवा यदंशास्समे ।
तत्सत्यं निखिलं ततोऽन्यदपि यन्मिथ्येति योऽबोधयन्
सोऽयं नः श्रियमातनोतु परमाद्वैती शिवादासराट् ॥ ३ ॥

पाणेश्च ग्रहणं यथावदथ साक्ष्यग्नेः क्रमस्त्रिस्ततो
होमो लाजहविर्वरस्य सुतरां तद्धूमसेवा तथा ।
भर्त्रा साकमनुष्ठितिश्च तपसां प्रेक्षा ध्रुवस्य ध्रुवं
कल्पान् द्विःसमुवाच कालिभृतको देयात्स कल्पे मतिम् ॥४॥

पश्चाद्भेदमुपेयुषेति गुणतो मूर्तिप्रभेदं ब्रुवन्
सृष्टेः प्रागथ केवलो भवति यस्तत्त्वं जगौ कारणम् ।
इत्थं वाक्पतिशंसनोक्तिमिषतो ह्यद्वैततात्पर्यवान्
यः सोऽयं प्रददातु केवलदशां कालीसुभक्तः कविः ॥ ५ ॥

क्षीरोदे शयितं स्तुवन् हरिमवाङ्चित्तास्पदं निर्गुणम्
त्रेधास्थं गुणतस्तटस्थमथ च ज्योतिर्मयं मुक्तिदम् ।
दिव्याम्भोवदभिन्नमेकमजरं तत्त्वं परं वेदयन्
सोऽयं स्वं सुखमातनोतु कविराट् श्रीकालिदासः सुधीः॥६॥

देवं त्र्यम्बकमादिपूरुषमुमाकान्तं तपश्चारिणम्
स्वात्मानं परमात्मनीति निगमे संवर्णयन् शूलिनम् ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

भेदं त्रैपुट्टिकं ह्यपास्य सहजं चालोकमाह स्म यः
सोऽयं योगमुपातनोतु नितरां ह्यष्टाङ्गपूर्णं कविः ॥ ७ ॥

शुश्रूषस्व गुरूनिति स्वतनयाधर्मोपदेशो यथा
भर्तुर्गेहगतावकारि मुनिना वृत्तिं गृहिण्या जगौ ।
लोकज्ञा वयमप्यरण्यनिलया इत्येवमप्यूचिवान्
यः सोऽयं सुखमातनोतु सुतरां लोकस्वभावार्थवित् ॥८॥

मद्रास्प्रान्तसुसंस्कृतीसमितिसम्भाव्ये कवीन्द्रोत्सवे
विद्वत्संघसुपूरिते रसिकवर्याधिष्ठिते शोभने ।
खद्योतस्य च दीप्तिरेव कृतिरित्याभाति भानावियं
प्रोत्साहात् कुतुकी समर्पयति तां गृह्णन्त्वभिज्ञा मुदा ॥ ९ ॥

दृश्यत्रयात् श्रव्ययुगाच्च काव्यात्
स्थालीपुलाकाख्यनयेन नूनम् ।
अद्वैतनिष्ठः शिवभक्तवर्यः
लोकज्ञकल्पज्ञवरिष्ठ एव ॥ १० ॥

---

## कालिदासप्रतिभाप्रशंसा

Vaidyaratna Pandit M.DURAISWAMI AIYANGAR,
*Ayurveda Bhushana, Ayurvedacharya,* Medical Practitioner

भारतं विहतबाधमेधतां भारती च सुचिराय सांस्कृती ।
सांस्कृती च परिषत् सहोन्मिषत्कालिदासयशसा महीयसा ॥ १ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


वागर्थौ नियमेन तस्य वशगौ तौ पुष्पमाक्षीकवत्
संपृक्तौ वहतो विदग्धमुखतः श्रीकालिदासस्य यत् ।
द्राक्षापाकनिबन्धबन्धुरमतो गोष्ठीषु संख्यावतां
सर्वेषामदसीयमित्यविरतं सारस्वतं विश्रुतम् ॥ २ ॥

अस्त्याशैलपतेर्हिमस्य निलया दा चान्यतः सिंहल-
द्वीपादभ्यसनाय संस्कृतगिरस्तस्यैव सारस्वतम् ।
काव्यं नाटकमप्युपात्तमखिलैर्यद् व्यञ्जत्यस्य वा-
गा बालादपि चा विदग्धहृदयादाचामयोग्या नृणाम् ॥३॥

कश्चित् कश्चिदिहास्ति तादृगधुनाभूद्वाऽथवोत्पत्स्यते
यस्तादृक्कविताविहारसरणावीष्टेऽधिगन्तुं प्रथाम् ।
विश्वस्मिन्नपि कालिदासकविना विश्वे महत्यार्जिता
कीर्तिर्या कविसार्वभौम इति च प्राज्ञाः प्रशंसन्ति यम् ॥४॥

या सृष्टिः कविताप्रपञ्चविभवस्यारम्भनाडिन्धमा
नाट्याख्या च कला सुशिक्षितधियां या वीक्षणार्हाजनि ।
संदेशाह्वयकाव्यमप्यभिनवं तादृक् कवीनां ततो
लक्ष्यं लक्षणमप्यभूद्यदखिलं तत् कालिदासागतम् ॥ ५ ॥

वेदान्तेषु नितान्तदान्तहृदयैर्ज्ञेया निदिध्यासनाद्
ये धर्माः प्रभुसंमितेष्वभिहिताः सर्वप्रजाश्रेयसे ।
कामं ते खलु कालिदासकविना काव्यैर्मनोहारिभिः
कान्तासंमितबन्धुरैर्मृदुधियामापादिता रञ्जकाः ॥ ६ ॥

ऐकैश्वर्यमनन्यलभ्यमभजत् साहित्यसाम्राज्यका-
धीशाख्यं भुवि कालिदासकविराड् भाग्येन देशस्य नः ।
वैदग्ध्यं च कथानिबन्धनविधौ वैदर्भरीत्या गिरां
नैपुण्यं रचने च सर्वमितरद् भोग्यं हि तद्वाङ्मयम् । ७ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

विद्यानां शैशवे स्यात् परिचितिरुचिता शुद्धिराजानसिद्धा
गार्हस्थ्यं स्यात् प्रजायै वयसि परिणते वीतरागित्ववृत्तिः ।
निस्तन्द्रा चाफलाप्तेर्व्यवसितिरनघा सत्यहेतोर्मिता वाक्
त्यागायार्थार्जनं चेत्यभिजनमहिताः कालिदासस्य धर्माः ॥८॥

पश्चादुच्चैरिति नटपतेः सान्ध्यनृत्यप्रसङ्गे
त्वय्यादातुं जलमिति सरिन्मेघसङ्गाभिधाने ।
हित्वा तस्मिन्निति गिरिसुताशर्वयोः पर्वताग्र-
प्रस्थाने च प्रथयति कविः कल्पनाप्राभवं स्वम् ॥ ९ ॥

दिङ्मात्रं तन्मतिविलसितं सूचितं मेघदूते
मेधाशक्तिस्फुटयति कवेर्वस्तु काव्यस्य कृत्स्नम् ।
कश्चिच्छब्दादनितरसमं राममाधाय चित्ते
स्वस्मिन् चित्रं व्यलिखदखिलं मारुतिं मेघरूपम् ॥ १० ॥

वैदर्भीं रीतिमेनां कविकुलतिलकः शब्दपारुष्यहीना-
मैच्छद्दीर्घैः समासैरपि गुणरहितैर्वर्जितां शब्दजालैः ।
हेतोरस्माद्धि सेतोः प्रभृति हिमगिरेरन्ततः श्रव्यकाव्ये-
ष्वारुह्योच्चैस्तदास्ते रघुकुलमधिकृत्योदितं काव्यरत्नम् ॥११॥

या दैवीति च सांस्कृतीत्यपि जगत्यर्थ्यामभिख्यां चिरा-
दासाद्याथ कलेर्विलासवशतो दीनां दशामश्नुते ।
विद्या सा भुवि कालिदाससदृशैः प्रागादृता सूरिभि-
र्भूयो भूतिमवाप्य संस्कृतसभासंभाविता जृम्भताम् ॥१२॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


Dr. B. Ch. CHHABRA,
*Deputy Director General of Archaeology, Delhi*

कविताशक्तिसमेतं सूक्तिसुधाकरमनङ्गसन्दीपम् ।
प्रतिभागङ्गं वन्दे नवं शिवं कालिदासाख्यम् ॥ १ ॥

सर्वज्ञ इव सर्वज्ञो दुर्गार्थप्रतिपादकः ।
कालिदासः कथं न स्याद् विबुधानां वराग्रणीः ॥ २ ॥

काव्यनाटकपुष्पेषु कालिदासस्य मञ्जुषु ।
वासना भावना सान्द्रा भवे वाति पदे पदे ॥ ३ ॥

मङ्गले वोपमायां वा प्रसङ्गे वापि कुत्रचित् ।
स्मराराते: स्मरत्येव कालिदासः पदे पदे ॥ ४ ॥

कल्पना कालिदासस्य विमानाद्युपवर्णने ।
साक्षादनुभवस्यैव प्रतिभाति प्रतिच्छटा ॥ ५ ॥

प्रतिभास्ति कालिदासे तृतीयमिव लोचनं शर्वे ।
सर्वं परोक्षमपि यत् समक्षमिव भासते तस्मै ॥ ६ ॥

कालिदासस्य काव्यानि मुक्तावल्यः समुज्ज्वलाः ।
शिवभक्तौ दृढे सूत्रे घनं प्रोताश्चकासति ॥ ७ ॥

निःष्यन्दो रसनिर्भरः सुमधुरः साक्षात्सुधादीधिते-
भूतेरेव तथावदातमतुलं सारस्वतं वैभवम् ।
गङ्गायाः किल भङ्गयश्च रुचिराः काव्यप्रबन्धेष्वहो
सर्वोऽयं कविकालिदासमहिमा त्रैयम्बकोऽनुग्रहः ॥ ८ ॥

शिवभक्तिमेव सिद्धिं मन्वानः कालिदासीयाम् ।
प्रीत्या प्रशस्तिमेतामतनोच्छापोत्कटः कोऽपि ॥ ९ ॥

---

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

# कालिदासोन्नतिः

Mahamahopadhyaya KASI KRISHNACHARYA,
*Guntur*

श्रीकान्तपादनखरत्नमणिप्रसूता-
माकाशसिन्धुलहरीमपि याऽतिशेते ।
लोकोत्तरां सरसवाङ्मुखपद्मजां तां
श्रीकालिदासकवितामिह वर्णयेत् कः ॥ १ ॥

या कोमलध्वनिजितालिपदक्रमाळी
लोकातिशायिकविमानसलब्धकेली ।
लोकान् प्रहर्षयति पश्यत काकवीळी
सा कालिदासकविराट्कवितामराळी ॥ २ ॥

श्रीकालिदासकवितातिरसालिपाक-
मेकांशमप्यनुभवन् प्रमदातिरेकम् ।
पाकारिरप्यपहताखिललोकशोकं
नो कांक्षते वत कदापि सुधाभिषेकम् ॥ ३ ॥

मूकोऽपि यत्करुणया कविराड् भवेच्चेत्
सा कालिदासवपुषैव समागता चेत् ।
लोकेऽन्यादीयकवितानुपमापि वा स्यात्
का कालिदासकवितातुलिता भुवि स्यात् ॥४ ॥

ओजःप्रसादमुखसद्गुणवाग्विलासां
योऽजीजनत् स्वकवितां तमु कालिदासम् ।
यो जन्तुरिच्छति हृदाप्यनुकर्तुमन्यः
सोऽजागळस्तनपदं समुपेत्य धन्यः ॥ ४ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


या माननीयविबुधस्फुटदृश्यमान-
सामान्यलक्ष्म्यनुपमोपमयाप्यनूना ।
सा मञ्जुलस्वनलसत्पदकालिदास-
धामप्रकाशकवितानुपमैव भाति ॥ ६ ॥

वाटी यथा सुमनसां मधुभिर्द्विरेफं
गेटिं विवर्णमपि यत्कवितावधूटी ।
चाटूक्तिभिर्मुहुरमीमददेकदा सा
शाटीधरं किमपि न प्रमदीकरोति ॥ ७ ॥

स्वाभाविकाशेषविशेषभूषा
या भाति कालीपदकाव्यभाषा ।
सा भावुकादात्मन आत्मतौल्यात्
बाभात्यहोऽनन्वयमात्रशेषा ॥ ८ ॥

एकेन वचस्यखिलपाकरसैरुपेतां
श्लोकेन राघवकथासुधयातिपूताम् ।
नाकूद्भवस्य कवितामपहाय लोके
नो कालिदासकवितोपमिताऽपि नाके ॥ ९ ॥

श्रीमत्पाणिनिवाक्सुधारसरुचिं जिह्वा न जानाति मे
वाणी काणभुजी न वा मम मुखे नो मन्त्रतन्त्रादिकम् ।
नालंकारततिस्ततस्सुकविता कन्या न लब्धा मया
काहं मन्दमतिः क वा कृतिपतिः श्रीकलिदासोन्नतिः ॥१०॥

---


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

# कालिदासमाहात्म्यम्

Mahamahopadhyaya K. S. KRISHNAMURTI SATRI,
*Former Poet-laureate, Madras*

सुकुमारपदन्यासा व्यञ्जयन्त्यर्थसम्पदम् ।
अमन्दरसनिष्यन्दा कालिदासस्य भारती ॥ १ ॥

अङ्कुरयन्ति सहृदां हृदये निलीन-
मानन्दकन्दमविलम्बमनाविलानि ।
श्रीकालिदासवचनानि चमत्कृतीनां
स्थानान्यपूर्वपरिपाकमुपागतानि ॥ २ ॥

अवन्ध्यं वैदग्ध्यं मृदुपदनिवेशे कुशलता
प्रशस्तार्थव्यक्तीकृतिविधिषु नूत्नश्चतुरिमा ।
रसं शृङ्गाराख्यं सति पथि समुत्कूलयितुम-
प्यलंभावश्चैते प्रकृतिविहिता ह्यस्य विदिताः ॥ ३ ॥

भावे भावे स्फुरति सुषमा याऽसमा तामयत्नाद्
व्राह्मयाः स्वस्यालमतिशयितुं ह्येष सौन्दर्यभूम्ना ।
शब्दार्थालंकृतिषु सुकृती केवलं न प्रवीणः
किन्त्वन्यादृक्सरणिरुपमा रूपणे चाभिरूपः ॥ ४ ॥

लावण्यद्रविणैररण्यभुवि याऽक्रीणीत दुष्यन्तम-
प्याद्येऽङ्के मृगयार्थमागतमहो ! लीलाविलासैकभूः ।
भर्त्रा सैव शकुन्तला सुतवती मारीचदिव्याश्रमे
साध्वी दीक्षितदारवद् दृशिपथं नीता कवेः कौशलात् ॥५॥

दुर्वाससः शापमदृश्यमूलमयूयुजद् रूपकसार्वभौमे ।
अभिव्यनक्त्येतदसंशयं नः श्रीकालिदासप्रतिभाविलासम् ॥६॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


दृश्येषु शाकुन्तलमेव रम्यमङ्कस्ततो रम्यतरश्चतुर्थः ।
चत्वारि पद्यानि ततोऽपि रम्यतमानि भांतीति विपश्चिदुक्तिः ॥

विमर्श एष ह्यविचाररम्यः कृतिष्वमुष्यास्ति न तारतम्यम् ।
व्यङ्ग्यप्रधानास्तु कवीश्वरस्य वल्मीकजानुग्रहभाजनस्य ॥८॥

सुमसमपदवृन्दं स्पन्दयन् मन्दमन्दं
निजकृतिषु च पात्रीभूतयोषिन्मुखाब्जात् ।
किमपि किमपि तन्वंश्चेतसि प्रेक्षकाणां
कविकुलतिलकोऽयं वर्ण्यमानः कथं स्यात् ॥ ९ ॥

कान्तासंमितया सुधासरसया व्यंग्यैर्भृशं श्लाघ्यया
धर्माधर्मविवेकमाकलयते वाचा हि मन्वादिवत् ।
लोकानुग्रहकाङ्क्षिणो भगवतः पत्युः कवीनां क्षितौ
कालीं दासयतीति निर्वचनतो नामापि सार्थं ध्रुवम् ॥ १० ॥

अर्थान्तरन्यासविशेषविज्ञो योषित्स्वभावज्ञ इति प्रसिद्धः ।
मनोगतान्वाचि निवेश्य भावाल्लँच्यां जगद्रञ्जयितुं क्षमोऽयम् ॥११॥

हृदयहरिणी वैदर्भीयं कवीशसमादृता
सुललितपदैः संस्निह्यद्भिः पचेलिमतां गता ।
अलमशिथिलं बन्धं लब्ध्वा समिद्धमनाविलं
लसति सकलं वृत्तं श्रोतुं मनोहरतां गतम् ॥ १२ ॥

अस्त्युत्तरस्यामितिपद्य एव प्रकाशयामास च देशभक्तिम् ।
षडङ्गवेदार्थरहस्यवेत्ता षट्सु प्रवीणोऽपि च दर्शनेषु ॥ १३ ॥

अनाघ्रातं पुष्पं किसलयमितिश्लोककलन-
च्छलात्स्वीयां वाणीं परमरमणीयां गणयति ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

चरित्रं रामस्य स्वकृतरघुवंशे निपतितं
गुणैर्ग्राह्यं रामायणवदिति कामं प्रथयति ॥ १४ ॥

श्रीकालिदासकवितामृतपानमत्ताः
श्रीकेळिदासविबुधानवहेलयन्तः ।
आनन्दसान्द्रमरविन्ददृशं स्मरन्तः
भूयास्म भूम्नि निरता भुवि भारतीयाः ॥ १५ ॥

---

## कालिदासीयकाव्येषु प्रकृतिसौन्दर्यवर्णनम्

K. S.NAGARAJAN, *Bangalore*

नवरसभरितानां लोककल्याणदानां
शुभतरकवितानां रम्यनिर्माणदक्षम् ।
प्रथितयशसमीडे भारतीप्रीतिपात्रं
कविसमुदयबन्धुं कालिदासं कवीन्द्रम् ॥ १ ॥

रघुचरितकुमारोत्पत्तिकाव्यद्वयेऽपि
त्रिषु भुवि च तथा वा दृश्यबन्धेषु सत्सु ।
अपि च ऋतुसमूहे मेघदूते विभाति
प्रकृतिरुचिरलक्ष्मी रञ्जयन्ती मनांसि ॥ २ ॥

मृदुरुचिरपदौघैर्नव्यशोभाभिपूर्णै-
र्गुणगणविलसद्भिर्भावगर्भैर्मनोज्ञैः ।
सहृदयहृदयानां शाश्वतानन्ददातृ
प्रकृतिपरमशोभाभूषितं तस्य काव्यम् ॥ ३ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

प्रकृतिसुभगमस्य श्लोकवृन्दं सुधायाः
श्रवणपुटसमीपे दिव्यधाराभिवृष्टिम् ।
सरसमखिलकाले संविधाय प्रमोदं
प्रसरति ननु पङ्क्तौ पण्डितानां प्रभूतम् ॥ ४ ॥

अलमकुरुत योऽसौ काव्यलक्ष्मीं समग्रां
हिमगिरिसुरगङ्गावर्णनाद्यैः स्वकीयाम् ।
इह भुवि नवरूपं प्राप्य सा सद्विलासं
प्रतिनिमिषमुपैवापूर्वशोभां विधत्ते ॥ ५ ॥

शशधरकिरणौघैर्वृष्टिभिश्चाभिपुष्टा
वनभुवि तरुसङ्गा बालवल्लीसमूहाः ।
नयनयुगमनोज्ञास्तस्य काव्येषु नूनं
प्रचुरतरविधानैर्जीवकान्त्या विभान्ति ॥ ६ ॥

भुवनविदितकाव्ये मेघदूते कवीशः
प्रकृतिरुचिरशोभावर्णनेनातनोति ।
श्रवणयुगसुधासेनासकृद् भूरिमुग्धं
जनसमुदयमद्धा मोहनास्त्रानुविद्धम् ॥ ७ ॥

प्रणयमधुरगीतैर्हंसकारण्डवानां
शुकपिकविहगानां पूर्णकामान्यतीव ।
प्रणवपदपवित्राण्याश्रितान्याश्रमाणि
प्रथिततरयशोभिः काश्यपाद्यैर्मुनीन्द्रैः ॥ ८ ॥

ध्वनिभरितपदौघैरक्षरैरर्थपूर्णै-
र्विरचितकवितायां मञ्जुलायां हि तस्य ।
प्रतिफलितमिवोच्चैर्दुःखदारिद्र्यदग्धं
भवविपदि भवस्य प्राणिनो जीवितं नु ॥ ९ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

स्तबककुसुमनम्राः पल्लवैर्भासमाना
वनभुवि लतिकास्ताश्चारुतामूर्तिमत्यः ।
स्तनभरविनताभिः सस्मिताभिः समन्तात्
कविकृतिषु वहन्ति प्राज्यसाम्यं वधूभिः ॥ १० ॥

न भवति न हि कश्चित्पूर्णकामोऽवलोक्य
प्रकृतिमधुरवेषं वर्णितं चारुरीत्या ।
कविकुलगुरुणा श्रीकालिदासेन सम्यक्
लिखितमिव विचित्रं चित्रकारेण नूनम् ॥ ११ ॥

---

Vidwan R. NARAYANASWAMY, *Mannargudi*

तावकमपि यदि चेतः स्वात्मन्यप्रत्ययं त्वमयि मनुषे ।
कविराज कस्य कविता सहृदयपरितोषकार्यपारीणा ? ॥ १ ॥

दौत्ये तस्मिन् जनकतनयाजानिवृत्तान्तगर्भे
कामार्तानां प्रकृतिमभितः स्थापिते दर्पणे वा ।
स्वादं स्वादं विरहविभवं वञ्चिताः स्मस्त्वदर्वाङ्
मन्दाक्रान्तं विविधविरसं हन्त सन्देशकाव्यम् ॥ २ ॥

न विवृतो मदनो न च संवृतो रतिविकासपरासु तवोक्तिषु ।
विरसशब्दभराकुलगुंफनै रतिरसो विहतः कविकामुकैः ॥

लोकापवादात् स बिभेति रामः शापादिवोन्मुह्यति पौरवोऽपि ।
निर्दह्य निर्याति हरस्स्मरांगं हा निर्दयस्त्वं तव नायिकासु ॥

हिमालयोपान्तहिमोत्किरानिलाः सहस्यरात्रीरुदवासतत्परा ।
निनाय या चक्रयुगे कृपावती कृपां विना सा ससृजे भ्रुवं त्वया ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

कृतोपकारेव रतिर्बभूवेत्युत्प्रेक्ष्य शोकं कविना कठोरम् ।
रसैकजीवो रसिकैकवेद्यो वैदर्भमार्गो विशदीकृतः किम् ॥ ६ ॥

वनौकसः कस्यचिदात्मवेत्तुश्चित्तं तथा स्नेहनियोक्त्रबद्धम् ।
उत्कण्ठितो बाष्पनिरुद्धकण्ठो यथा स चिन्ताजडदर्शनोऽभूत् ॥

जुगुप्समानाः सुखसंगिलोकात्
सृष्टास्त्वया शाङ्गरवादयोऽपि ।
कण्वस्य जन्मान्तरतः प्रबुद्धं
भावस्थिरं सौहृदमेव नूनम् ॥ ८ ॥

सृष्ट्वा मालविकोर्वश्यौ यौवनोत्थमदोक्तिभिः ।
वाग्भिर्दान्तप्रसन्नाभिरस्रजः किं शकुन्तलाम् ॥ ९ ॥

कृत्स्नं श्रुत्यन्तगं तत्त्वं कालिदास तवोक्तिषु ।
प्रसादविशदं दृष्टं दुरूहैर्दर्शनैरलम् ॥ १० ॥

---

## शृङ्गाराद्वैतवादी कालिदासः

V. A. RAMASWAMI SASTRI,
*Deccan College Research Institute, Poona.*

महाकविं कालिदासं शृङ्गाररसकोविदम् ।
नमस्कृत्य च तद्वाणीरसपाने यतेऽधुना ॥ १ ॥

काव्यस्यात्मा रसो मुख्यस्तत्र शृङ्गार उत्तमः ।
विप्रलम्भः सुखोदर्कः कालिदासस्य सम्मतः ॥ २ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

अपोषयत्तदङ्गानि हास्यं करुणमद्भुतम् ।
शाकुन्तलादिषु कविर्भयहेतून्यपि क्वचित् ॥ ३ ॥

विदूषको राजसखो हास्यं जनयति स्वयम् ।
शाकुन्तले पञ्चमाङ्ककथा करुणमुज्ज्वलम् ॥ ४ ॥

भयानकं सूचयति मातलेश्च कथा, तथा ।
मरीच्याश्रमवृत्तान्तो हृदयावर्जकोऽद्भुतम् ॥ ५ ॥

एते सर्वेऽपि मुख्यं हि शृङ्गारं पोषयन्त्यतः ।
शृङ्गारमुख्यान्यकरोत्काव्यानि च यथोचितम् ॥ ६ ॥

'शृङ्गार एव मधुरः परः प्रह्लादनो रसः ।'
अन्ये निमित्तवैचित्र्यात्तद्विवर्ता मताः कवेः ॥ ७ ॥

'शरीरनाशेऽपि रतिं कुरुते प्रार्थना मिथः ।
समानुरागयोस्तत्तद्भावदर्शनकांक्षिणोः ॥ ८ ॥

एवं स्वरूपः शृङ्गारो वर्ण्यते कविना स्वतः ।
भोजोऽपि तस्य प्राधान्यं स्वैरं वर्णयति स्म हि ॥ ९ ॥

शृङ्गारे वर्ण्यमाने स्यात्सर्वं रसमयं जगत् ।
यतः स एव सर्वेषां हृदयाह्लादकः परः ॥ १० ॥

शृङ्गारानुकृतिर्हास्यमित्याहुर्भरतादयः ।
तस्मात्तन्नाटकेषु स्याच्छृङ्गाराङ्गं सुपोषितम् ॥ ११ ॥

मेघदूते विप्रलम्भं करुणाद्युपबृंहितम् ।
अन्येष्वपोषयद्वीरमन्यांश्च सरसं कविः ॥ १२ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

महेन्द्ररघुसङ्ग्रामे रघोर्दिग्विजये तथा ।
जन्येऽजस्य च रामस्य वीरं पोषयति स्म सः ॥ १३ ॥

करुणं साभिलाषं च वर्णयामास सत्वरम् ।
रतेरजस्य सीताया विलापेषु कवीश्वरः ॥ १४ ॥

संभोगश्चापि शृङ्गार ईश्वरेऽवर्णयत् स्फुटम् ।
दोषोऽपि कविशक्त्यात्र दृश्यते न हि बोद्धृभिः ॥ १५ ॥

एवं सर्वेऽपि हि रसा औचित्यविधिकल्पिताः ।
कल्पन्ते सर्वभोगाय नित्याय विपुलाय च ॥ १६ ॥

---

## किं प्रियं कालिदासस्य

Dr. V. RAGHAVAN,
*Professor of Sanskrit, Madras University*

पुंस्कोकिल :—अहं स चूताङ्कुरदंशरज्य-
त्कण्ठः प्रियस्ते ननु कालिदास ।
उत्कण्ठयत्काव्यपदैस्त्वदीयै-
र्यस्य स्वरो ह्युत्सहते तुलायै ॥ १ ॥

कालिदास :—पुंस्कोकिलामन्त्रयसे ! रसालः
किं पल्लवस्निग्धतयोपभोग्यः ।

पुंस्कोकिल :—तत्स्कन्धलग्ना वनकौमुदी च
नवप्रसूनस्फुटयौवनाढ्य ॥ २ ॥


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

कालिदासः—— शकुन्तले याह्यनयोर्विवाहं
सन्नाहयाहं समुपैमि शीघ्रम् ।
सन्दिश्य तां मालविकामशोकं
मन्दं प्रसूनेषु पदा निहन्तुम् ॥ ३ ॥

शकुन्तला—— कवीन्द्र किं स्थावरमानसस्त्वं
यूनोस्तु योगे कुरुषे विलम्बम् ।

मालविका— योगश्चिरेणास्तु, किमेवमेतौ
वियोगवह्नौ शलभीकरोषि ॥ ४ ॥

कालिदासः— लतायुवत्योर्मृगपक्षिपुंसां
न मे भिदा सुन्दरयोगदृष्टेः ।
भावान् हि नानोल्लसितानि हैका
सौन्दर्यसंवित्सरसीकरोति ॥ ५ ॥

शकुन्तले मालविके युवां मे
तथा प्रिये न प्रथमावलोके ।
यथा वियोगाग्निविशुद्धसत्त्वे
तापं विना का घटना दृढा स्यात् ॥ ६ ॥

अयेऽत्र को मेंऽशुककोटिलम्बीः
गतिं निगृह्णात्यहहार्भको मे ।
कुशाक्षतं दर्शयितुं हि दीर्घा-
पाङ्गोऽङ्गमायाति मृगार्भको मे ॥७ ॥

श्यामाकमुष्टिमुपभुङ्क्ष्व तवाहरामि
द्राक् तैलमैङ्गुदमपो नलिनीदलेन ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


कविः— इत्यन्यतो विपिनचारिणि कालिदासे
बालो व्यलोकि पथि कश्चिदबालसत्त्वः ॥ ८ ॥

अङ्के स दुर्ललितबालममुं गृहीत्वा
यावत्तदङ्गरजसा शिवभस्मनेव ।
स्वाङ्गं पवित्रयति तावदमुं कवीन्द्र-
मन्यो जहार तुरगेन खमुत्पतिष्णुः ॥ ९ ॥

कालिदासः— कस्त्वं कुमार तव हन्त शरीरयोगः
सौख्यं निविश्वति, दृगन्तनिमीलनेन ।
लीये समाधिषु यथा

कुमारः— रघुरस्मि दिव्य-
धेनुप्रसादसमुपाहितदिव्यतेजाः ॥ १० ॥

ऐन्द्रं पदं क्रतुशतेन समाजिहीर्षोः
तातस्य विघ्नमभिषेणयितास्मि शक्रम् ।
अस्मिन् समीपत उपेयुषि मेघपीठे
स्थित्वा रणं मम च वज्रभृतश्च पश्य ॥ ११ ॥

कविः— दैलीपाश्वात् जलदमभजत्तत्पथेनोपयातं
प्रत्यासन्नामरपतिधनुस्तोरणं कालिदासः ।
तस्य प्रेयान् खलु जलधरो यो यथेच्छं कवीनां
भावो यद्वद्दिवि विहरते चित्ररूपं दधानः ॥१२॥

मेघः— दुःखो ह्यध्वा कविपरिवृढ त्वं सखाप्तोऽद्य दैवा-
न्नूनं साम्यं भवति कविना भूयसा मेऽम्बुदस्य ।
आस्ते विद्युन्मयि भवति च प्रातिभं ज्योतिरन्तः
द्वावप्यावां निजरसभरैः लोकमुज्जीवयावः ॥१३॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

कालिदासः— मन्ये मेघ व्रजति हि भवानुत्तरामेवमाशां
तत्रैवास्ते मम च भवनं मूलभूतं पुराणम् ।

मेघः— नेष्यामि त्वां वसतिमलकां नाम यक्षेशितुस्तां
बाह्योद्यानस्थितहरशिरश्चन्द्रनष्टान्धकाराम् ॥१४॥

कालिदासः— अत्र मां त्यज वलाहकाधुना
गन्धमादनवनान्तभूमिषु ।
चिन्मयी सुरनदीह तत्तटे
शक्यमादिपितरौ हि वीक्षितुम् ॥ १५ ॥

प्रेमचारिमविमानयोगतः
प्रापितोऽस्मि परतत्त्वसन्निधिम् ।
शब्दमर्थमपि पक्षती दधद्
राज एव हि सुपर्णसन्निभः ॥ १६ ॥

आः कुमारवनमेतदाश्रितः
स्यां भुवीह लतितकात्मना क्वचित् ।
स्यात्तथात्र विहरच्छिवाङ्घ्रिणा
मर्दनं सकलबन्धमर्दनम् ॥ १७ ॥

सङ्गमनीयं मणिवरमथवा विचिनोमि काननेऽत्रैव ।
यस्य प्रसादतोऽहं युज्ये नाथेन भूतनाथेन ॥१८॥

अहो अहो नमो मह्यं यदुदेति पुरो मम ।
सोमास्कन्दं परं ज्योतिः वागर्थरससौभगम् ॥१९॥

---

गच्छन्नाकाशयानेन ततोऽप्युपरिचारिणीम् ।
अन्वेतुमैच्छत्प्रतिभां कालिदासस्य राघवः ॥ २० ॥

---

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

*Saralakavi* P. RAGHAVACHARYA
*Professor of Vyakarana, Sanskrit College, Madurantakam.*

आद्ये सर्गे विसृष्टे तदिदमवगतं भूपतेर्लक्षणं यत्
रक्षादक्षः प्रजानां तदुपहृतबलेस्तद्धितानां विधाता ।
विद्योत्पादाद्विपत्तिप्रशमनकरणादन्नपानादिदानात्
पित्रा तुल्यो विनीतिं भयविरहिततामुच्चसौख्यं च तन्यात् ॥१॥

ब्रह्माख्यं तत्त्वमेकं विधिरिति हरिरित्युग्र इत्युच्यमानाः
तिस्रोमूर्तीर्दधानं सृजति जगदवत्यत्ति चान्ते क्रमेण ।
भिन्ना नानागमैरप्यहह सरणयः सिद्धये कल्पमाना-
स्तस्मिन्नेवाविशन्ति द्रुततरमुदधौ जाह्नवीया इवौघाः ॥ २ ॥

तस्मिन्नेवार्पयित्वा निखिलमपि निजं कर्म चित्तं विशुद्धं
तस्मिन्नावेश्य तेजोमयपुरुषमिमं ध्यायतां निस्स्पृहाणाम् ।
मुक्तिस्तस्य प्रसादाद्भवति सुखमयी तत्पदप्राप्तिरूपा
भूयो नो सन्निवृत्तिं भुवन इह परं ते महान्तः श्रयन्ति ॥ ३ ॥

अन्तःक्षीरांबुराशेरहिपतिशयनासीनमब्जासनाया
अंके तत्पाणिपद्मोपरि निहितपदं पुण्डरीकायताक्षम् ।
दीप्रं दोर्भिश्चतुर्भिर्धरि विनयवता पक्षिराजेन जुष्टं
ध्यातुः सर्वेष्टसिद्धिर्हरिमिति दशमात्सर्गतो हि प्रतीमः ॥

कृत्याकृत्येषु मुग्धे पशुवदतितरां वृत्तिमास्थाय हेयां
क्लेशं क्रिस्तूदयात्प्रागनुभवति भृशं हूणवर्गे प्रतीच्याम् ।
तत्काले जन्मलब्धुर्भरतभुवमिमां सर्वतो भद्रयुक्ता-
माख्यातुः का कवीन्द्रोर्न भवति जनता स्रग्धरा मानने ऽस्य ॥

---

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

*Vidwan* P. RAMADASS
*Anandatandavapuram.*

काव्ये दीव्यति कालिदासरचिते वस्तु प्रशस्तं यत-
स्स्संमूर्च्छत्प्रतिभाविलासमहितात् काव्यं भृशं शोभते ।
हृद्यैर्यद्यपि साधु रागनिकरैरालेख्यमारञ्जितं
नो धौतो न च घट्टितो यदि पटः, शोभां हि नैवाश्नुते ॥

दुष्यन्तो हि शकुन्तलां परिणयन् राज्यार्थिनीं छद्मना
पश्चादत्यजदात्मलाघवभियेत्याख्यानमादौ स्थितम् ।
तत् स्तोकं परिवर्तयन्, प्रियतमां साध्वीं नृपो व्यस्मरत्
शापेनेति वदन्नसौ कविरधात् शोभां परां नाटके ॥ २ ॥

सन्देशे चिदचिद्विवेकरहितो यक्षः पयोदं प्रिया-
सन्देशं कथयन्नपि प्रतिवचो नैवाप तस्माद्यदा ।
सन्तः कर्मरता वदन्ति न मुधेत्यात्मानमाश्वासया-
मासासाविति वस्तु कोमलतरं तथ्यानुगं चोचितम् ॥ ३ ॥

दातुं यज्ञवितीर्णसर्वविभवः कौत्साय वित्तं पुनः
वित्तेशाद्रघुराहरत्तदधिकं कुर्वन् युयुत्सां पराम् ।
किन्त्वादत्त ततो न किञ्चिदपि तत्सर्वं मुनावर्पय-
न्नित्थं वस्तु रघोर्गुणानतितरां स्तौति प्रसन्नोवज्ज्वलम् ॥ ४ ॥

स्वाङ्घ्रिस्पर्शधुताशुभामपि मुनेः पत्नीं ववन्दे तथा
कैकेयीं बहुदुःखदामिति च यो वाल्मीकिना वर्णितः ।
तं रामं द्विजवन्दितं कथयितुं नेच्छन्नयं वर्णय-
न्नेनं भार्गवन्दिनं विनयजं नेतुर्यशोऽवर्धयन् ॥ ५ ॥

---

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


K. RAMAMURTI SASTRI
*Professor of Mimamsa, Sanskrit College, Madras*

ब्रह्मवर्चससंपत्तिं विना लौकिकहेतुभिः ।
अकालमरणं भीतिरीतिरित्यादिका नृणाम् ॥ १ ॥

न शान्तिमधिगच्छन्तीत्येवन्नु कविरब्रवीत् ।
पुरुषायुषजीविन्य इति पद्येन चारुणा ॥ २ ॥

राज्ञाऽपि नियमस्थेन भोगसाधनसंपदा ।
स्वीकार्या फलसंसिद्ध्यै संविधा नियमोचिता ॥ ३ ॥

इत्यमुं नियमं कालिदासस्सम्यगवर्णयत् ।
निर्दिष्टामिति पद्येन वन्योपकरणं ब्रुवन् ॥ ४ ॥

प्राणान् दत्वाऽपि नियतं यशो रक्ष्यं महात्मनाम् ।
भौतिकेषु तु पिण्डेषु नाऽस्था कार्येत्युपादिशत् ॥ ५ ॥

कायेन मनसा वाचा संभृतं तप ऊर्जितम् ।
वासवस्यापि देवस्य धैर्यं लुम्पति हि ध्रुवम् ॥६ ॥

सर्वोपकारशक्तत्वाद् गार्हस्थ्यं परमं विदुः ।
स्मतार इति तत्त्वार्थं सर्वेत्यादिकमूचिवात् ॥ ७ ॥

अधिके निस्पृहश्चाऽर्थी नृपश्चाधिकदायकः ।
द्वाविमौ लोकसम्मान्यसत्त्वाविति कविर्जगौ ॥ ८ ॥

भोगेषु तृष्णया राज्यमात्मसात्कर्तुमन्ततः ।
दुरितान्यपि कुर्वन्ति नृपपुत्रास्तथाप्यजः ॥ ९ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

पितुराज्ञेति तद्राज्यमग्रहीदिति वर्णयन् ।
तृष्णाप्रभावं लोकस्य सम्यगावेदयत्यसौ ॥ १० ॥

विषमप्यमृतं तु स्यादमृतं वा विषं भवेत् ।
ईश्वरेच्छावशादत्र कारणं न हि पौरुषम् ॥ ११ ॥

एवं कथयताऽनेन दैवपौरुषयोर्महत् ।
अन्तरं वेद्यमित्येवं शिक्ष्यते लौकिको जनः ॥ १२ ॥

गृहिणी सचिवश्चाभूत् सखी च रहसि प्रिया ।
प्रियाशिष्या तु ललिते वादित्रादिकलाविधौ ॥ १३ ॥

एवमिन्दुमतीं साध्वीं वर्णयन् कविशेखरः ।
भर्तृमत्यास्त्रियो रूपं सम्यगाविष्करोति नः ॥ १४ ॥

मूढस्तु प्रियनाशं हि मन्यते शल्यमर्पितम् ।
स्थिरधीर्मन्यते कामं तदेव तु समुद्धृतम् ॥ १५ ॥

इति वर्णयताऽनेन वैराग्यं मोक्षसाधनम् ।
विषयाशानिबद्धानां सम्यगाविष्कृतं हि नः ॥ १६ ॥

---

*Sastraratnakara* P. S. RAMASASTRI
*Professor of Vedanta, Sanskrit College, Madras*

श्रीकालिदासो हि महाकवीन्द्रः स्वीयासु सर्वासु कृतिष्वपीशम् ।
स्तुवन्नुमां स्कन्दमपीशपुत्रं त्रिष्वात्मभक्तिं प्रथयाञ्चकार ॥ १ ॥

कालश्शिवः कालसुतस्तु कालिःस्कन्दोऽस्य दासं कविमामनन्ति ।
दासन्तु काल्या अपरे ब्रुवन्ति शिवे च भक्तिः कृतिषु स्फुटास्य ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

महेश्वरश्चेश्वर इत्यपीशे शब्दावनन्याश्रयिणौ यथार्थौ ।
शम्भोः परिच्छेत्तुमलं प्रभावं न धातृविष्णू कविरित्युवाच ॥ ३ ॥

न सन्ति याथार्थ्यविदः पिनाकिनो द्विषन्ति मन्दाश्चरितंमहात्मनाम्
न विश्वमूर्तेरवधार्यते वपुः कविर्ब्रवीतीति विभोरमेयताम् ॥ ४ ॥

एकैव मूर्तिर्बिभिदे त्रिधेति मूर्तित्रयं तुल्यगुणं तथैकम् ।
मूर्तित्रयस्तोत्रमिषादुवाच काव्यद्वये चापि रघौ कुमारे ॥ ५ ॥

विधिं जगद्योनिमथाप्ययोनिं ब्रुवन् कविः कारणकार्यभावः ।
अतात्त्विकोऽतो न विरोध इत्थं वेदान्ततत्त्वार्थमभिव्यनक्ति ॥६॥

विश्वस्य हेतुं तदुदासितारमविक्रियं वाङ्मनसातिदूरम् ।
सर्वात्मकश्चाह कविर्यदीशं विवर्तवादोऽभिमतोऽस्य नूनम् ॥७॥

दृष्टोऽसि साक्षान्न पुनर्वयं त्वां विद्मोऽसता ब्रूहि निजं स्वरूपम् ।
सप्तर्षिवाचा कथयन्निीतीशं कविर्वपुर्मायिकमाह शम्भोः ॥ ८ ॥

अकारणं कारणमाप्तवाचाऽनुमानतश्चावगतः क्रमेण ।
ईशोऽपरिच्छेद्य इति ब्रुवाणो ब्रह्मद्विरूपं कविराचचक्षे ॥ ९ ॥

त्वामामनन्ति प्रकृतिं हि सांख्या इतीश्वरेऽध्यासवशादभेदः ।
तद्दर्शिनं त्वां पुरुषं विदुश्चेत्येतत्परप्रत्यगभेददृष्ट्या ॥१० ॥

तत्त्वावबोधेन विना विमुक्तिस्तनुत्यजामित्यभिधामुखेन ।
तत्त्वावबोधं कविराह मुक्तेर्हेतुं न भक्तिं न च कर्म नान्यत् ॥११॥

सहोद्भवं कर्मविनिन्दितत्वेऽप्यवर्जनीयं कविराह काव्ये ।
गीतोक्तमर्थं सहजं सदोषमपि त्यजेत्कर्म न चेति जानन् ॥ १२ ॥

ईशे विभिन्ना बहुधाऽऽगमैर्यं पन्थान एते निपतन्ति सर्वे ।
सिद्धिप्रदा इत्यभिधानतोऽसौ कविस्समस्तं मतमाह सत्यम् ॥

---


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

*Mahopadhyaya* K. L. V. SASTRI
*Retd Sanskrit Pandit, Presidency College, Madras*

कवयः कति वा न सन्ति लोके दिवि नक्षत्रचया इव स्फुरन्तः ।
विधुवत् सरसैः कलाविलासैर्जनतानन्दकरस्तु कश्चिदेकः ॥ १ ॥

स च विश्रुत एव कालिदासः प्रतिभाशक्तिगुणेन भासमानः ।
मधुराः सरलाश्च यस्य वाचो रसधारां विकिरन्ति विष्टपेऽस्मिन् ॥

पदमर्थवशानुगं यदीयं रुचिरो लोकपथानुगस्तथार्थः ।
उभयं मिलितं महाकविं तं कविसाम्राज्यपदेऽभिषिञ्चति स्म ॥३॥

न स शाब्दिकशंसितैः प्रयोगैर्न च वालङ्कृतिभूमिकानिबन्धैः ।
अपितु प्रकृतेः श्रियं वितन्वन् कविषु श्रेष्ठ इति प्रथां जगाम ॥४॥

जगदीशितुरष्टधा विभिन्ना सलिलादिस्तनुरक्षिगोचरा या ।
प्रकृतिः समुपासिताऽमुना सा पुरतस्तस्य ननर्त भासुराङ्गी ॥५॥

स खगेषु मृगेषु वल्लरीषु द्रुमगुल्मेषु च विभ्रमाञ्चितेषु ।
सखिसोदरभावनां प्रशंसन् प्रकृतौ प्रेमभरं निजं व्यनक्ति ॥ ६ ॥

पदसङ्घटनानुरञ्जिता या प्रतिभाशक्तिरमुष्य कल्पनासु ।
इतरैः कविभिः सुदुर्लभा सा भवभूतिश्च तुलां न यस्य मेजे ॥७॥

रसभावसमुज्ज्वलास्य सृष्टिः परभागं प्रतिपद्य राजमाना ।
निखिलाभिमतं वदत्यपूर्वं चतुरास्यत्वममुष्य सर्गबन्धे ॥ ८ ॥

न स सङ्कुचितां नचातिरिक्तां सरणिं क्वाप्यनुयाति वर्णनासु ।
अपितु प्रतिपाद्यमर्थजातं कुरुते चित्र इवार्पितं कवीन्द्रः ॥ ९ ॥

ललनेव लसत्यकृत्रिमाभा विरलालङ्कृतिभूषितास्य वाणी ।
उपमाः पुनरस्य रञ्जितार्थाः कथयन्तेऽनुपमत्वमस्य वाचाम् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


परतत्त्वमसौ गिरां प्रभावैरनुमागम्यमुमाश्रितं व्यधत्त ।
अधरोत्तरतां नयन्ति लोकं प्रतिबुद्धाः कवयो हि वश्यवाचः ॥

कविना खलु तेन विप्रलम्भः परिपोषं गमितः स्वनाटकेषु ।
गणनावसरे पुरा कवीनां तमिमं नूनमवोचदद्वितीयम् ॥ १२ ॥

विबुधाग्रसरस्य तस्य वाण्यामभिधेयादपरो विभाति योऽर्थः ।
स सुगन्ध इव प्रसूनवल्यामनुकर्षत्यखिलं विदग्धलोकम् ॥१३॥

सुषमैकपदं सुनीतिसान्द्रं जितमाध्वीकरसं मनोज्ञबन्धम् ।
परितोषणमस्य काव्यजातं बहुधा भिन्नरुचेर्जनस्य लोके ॥ १४ ॥

द्विरेफसङ्गेन हतं सरोजं कलङ्कपङ्केन युतः सुधांशुः ।
न कालिदासस्य कृतेः समानं विलोक्यते वस्तु रसैकधाम ॥१५॥

---

B. L. SHANBOGUE
*Oriental Institute, Baroda*

श्रीवासुदेवो जगतः प्रभुर्मे शक्तिं प्रदद्यात्सुकवेः सुकीर्तिम् ।
गातुं पुनः पद्यमयैर्मदीयैर्वाक्यैर्नवीनाशयपूर्णशब्दैः ॥ १ ॥

का नाम शक्तिर्महतः कवेः सा वाक्यस्य पूर्णोपमया युतस्य ।
यया प्रमुग्धोऽपठदामरीं गां शर्मण्यदेशोद्भवपण्डितोऽपि ॥ २ ॥

लिखेत्परः को ध्वनिनैव गम्यं शृङ्गारमीशं प्रथमं रसानाम् ।
प्रसादयुक्तां यमकादिहीनां शैलीमनिन्द्यामनुसृत्य काव्ये ॥ ३ ॥

दारेषु पूज्यां रमणीं शकुन्तलां बालेषु पूज्यं भरतं महाबलम् ।
दुष्यन्तमादेयगुणं च नायकं समालिखत् त्रीनधिकृत्य नाटकम् ॥४॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

समस्तलोकेऽसममित्यनन्यां कीर्तिं भजेद् रूपकमेकमस्य ।
सूर्यं तपत्यन्यखगस्य का स्यात्कथान्यदीयं लभतेऽत्र योऽर्चिः ॥५॥

प्रथमेऽपि समीक्षकाः सदा कृतिषूदाहरणानि यत्कृतेः ।
अधिगत्य कृतार्थतां गता ननु पूज्या महतां हि सत्कृतिः ॥ ६ ॥

शशिना सह याति कौमुदीत्यधिगम्यार्थमनेकवाचकैः ।
विशदीकुरुते विधिस्त्वयं बहुलो यस्य कृतौ विशिष्यते ॥ ७ ॥

स्तिमितः करवाणि सादरं सकलो लोक इमं महाकविम् ।
स्मरतात् स्मरशत्रुणा कृतं तदनङ्गत्वमवर्णयच्च यः ॥ ८ ॥

---

## V. H. SUBRAHMANYA SASTRI

*Professor of Darsanas, Sanskrit College, Madras*

क्षीरोदवेलेव विशुद्धवृत्तिः प्रभातवेलेव विभासितार्था ।
नवं नवं भावमुपस्तुवन्ति श्रीकालिदासप्रतिभा विभाति ॥ १ ॥

प्रभामहत्या शिखयेव दीपः त्रिमार्गयेव त्रिदिवस्य मार्गः ।
कविप्रवेकप्रतिभाप्रवृत्त्या देशस्सुपूतश्च विभूषितश्च ॥ २ ॥

पुराणमित्येव न साधु सर्वं न चानवद्यं नवमेव किञ्चित् ।
कवीश्वरस्य प्रतिभाप्रकर्षः सदातनो भात्यनवद्यशोभः ॥ ३ ॥

अर्थं च शब्दं च समं वितन्वन् रसेन पूर्णं रसिकैस्समीड्यः ।
श्रीकालिदासप्रतिभाविलासस्तुलाग्रतुल्यप्रसरश्चकास्ति ॥ ४ ॥

वेगाद्वहन्ती च न चोत्तटासौ गम्भीरभावापि लसत्प्रसादा ।
रसोत्तरङ्गा प्रतिभानशैली भात्यस्य गीर्वाणतरङ्गिणीव॥ ५ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


शकुन्तलायां श्रितसौभागायां चूतं गतायां नवमालिकायाम् ।
मृगार्भके चापि समप्रकारो मुनेरिवास्य प्रतिभाप्रसारः ॥ ६ ॥

साञ्चरिणी दीपशिखेव रात्रौ यं यं च वर्ण्यं भजते विशेषात् ।
तं तं प्रकाशेन विशेषयन्ती विराजतेऽस्य प्रतिभानशैली ॥ ७ ॥

नालङ्कृतौ रागविशेषदर्शी न वर्णनेष्वप्यवशप्रसक्तिः ।
काव्ये स्थितप्रज्ञसमो विलासैः समेधतेऽस्य प्रतिभानमार्गः ॥८॥

कविप्रवेकेषु विराजमानेष्वनेन भूमिस्सविशेषशोभा ।
नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ ९ ॥

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधुनवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमपि कवीन्द्रस्य कविता-
सुधां स्वादं स्वादं भवतु सुरतुल्यः सहृदयः ॥ १० ॥

---

S. SUBRAHMANYA SASTRI
*Department of Sanskrit, Madras University*

कालिदास तव काव्यसंम्प्रदां स्वादिमा किमिह वर्ण्यते मया ।
मज्जयन्ति सुसुखं सुधार्णवे श्रोतुमुद्यतमनो हि सन्ततम् ॥ १ ॥

काव्येषु प्रथमो ध्वनिर्हि कथितो विद्वद्भिरेकान्तत-
स्तत्रोदाहरणाय विश्रुततमाः श्लोकास्त्वदीयास्समे ।
शृङ्गारप्रमुखान् रसान् प्रथयितुं श्लेषादिकान् सद्गुणान्
नान्यत्काव्यमिहास्ति सुन्दरतरं त्वत्काव्यनाट्यादृते ॥ २ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

रघोर्दिग्विजये वङ्गानुत्कलान् दक्षिणापथान् ।
केरळान् पारसीकांश्च काम्बोजान् हिमवत्तटान् ॥ ३ ॥

संवर्णयंस्तज्जनांश्च किन्देशीयो न भासि मे ।
सर्वो भारतवर्षोऽयं तवैवाभिजनो भवेत् ॥ ४ ॥

ऋषेः कण्वस्य वाल्मीकेर्वसिष्ठस्य महात्मनः ।
आश्रमान् वर्णितान् दृष्ट्वा त्वामृषिं मन्महे वयम् ॥ ५ ॥

ब्रह्मविष्णुमहेशाना एकस्यैव परात्मनः ।
मूर्तिभेदा गुणाक्षिप्ताः स्वयमात्मा तु निर्गुणः ॥ ६ ॥

इति ब्रुवन्नीशतत्त्वं समदृष्टिं रघोरपि ।
भवान् व्याख्याति वेदान्तान् भगवत्पादवर्त्मना ॥ ७ ॥

असंशयाद्यं पद्यं तु भट्टपादैरुदाहृतम् ।
निवेदयति धर्मेऽपि प्रामाण्यं वचसां तव ॥ ८ ॥

संसारासारतां तद्वदात्मनो नित्यमुक्तताम् ।
प्रकाशयन् वसिष्ठेन जीवन्मुक्तो मतोऽसि नः ॥ ९ ॥

---

*Sahitivallabha* T. SUNDARACHARYA, *Sirkazhi*

यस्तृतीयपुरुषार्थसंभृतीः श्रोत्रपेयवचनैर्ब्रुवन्नपि ।
धर्ममेव हृदयेन लक्षते सोऽस्तु नः प्रणतिभाजनं कविः ॥ १ ॥

क्व प्रजार्थगृहमेधिता क्व च स्त्रीनिषेवणमदृष्टसन्तति ।
एकरम्यमववर्णत द्वयं योगिवत्कविरभिन्नदर्शनः ॥ २ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


क्रान्तदर्शनतया महान् कविः 'नैव रूपमिह पापवृत्तये'।
इत्युवाच गिरिजां प्रमाणयन् हन्त तद् रसिकलोकमङ्गलम् ॥

नूनमेष कविराड्य आगतः कालिदासतनुमात्रनिह्नुतः।
जन्मभाग्यरिरिवाक्षिशोभया वाग्विलासविधयैव सूच्यते ॥ ४ ॥

सैव चारुरचना पदाश्रया सैव सा मधुरता गिरो गता।
वीणयेव जनितः कृतिध्वनिः सोऽपि सः श्रतिसुखाय कल्पते ॥ ५ ॥

कालिदासकविसार्वभौमवाक् सा स्वयं निरुपमा न हीयते।
लोकतः सकलतश्च शास्त्रतः प्रोत्थिताभिरुपमाभिराद्रृता ॥ ६ ॥

ह्लादनश्च मधुरश्च यो रसो मन्मथस्य दयितश्च दीप्यते।
स स्वयं कविकृतीरुपाश्रयन् तानि तानि रसनानि शिक्षते ॥ ७ ॥

यश्च पौरवशकुन्तलाश्रयं नाटकोद्यमभिधाय सत्कविः।
ईश्वरं फलमतः प्रयाचते मुक्तिमेव न हि सा क्रियाधिका ॥ ८ ॥

कालिदासवदनाब्जनिर्गतां विश्वमोहनकरीं सरस्वतीम्।
यौषितीमपि तनुं हरेस्तथा तत्त्वतः कलयितुं क ईश्वरः ॥ ९ ॥

एतान्यलं सहृदयैः प्रतिमोदितानि
निश्श्रेयसाय जगतामवतारभाञ्जि।
श्रीकालिदासकविवर्यवचोऽमृतानि
भूयासुरसदभिरूपशुभोदयाय ॥ १० ॥

---

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

# कालिदासस्य धर्मतत्परता

D. T. TATACHARYA, *Tirupati*

रसैर्निषिच्याखिलमर्थजातं निवेदयन्निर्वृतिमातनोति ।
विदग्धवर्गस्य विशेषतो यः स कालिदासः कविरग्रगण्यः ॥ १ ॥

उदारनानारसबन्धबद्धभावो भवत्येवमथापि धर्मे
दृढां जनानां धियमादधानो मान्यो मनोऽयं महतां धिनोति ॥२॥

दण्ड्यस्य दण्डात् स्थितये दिलीपः प्रसूतिहेतोः परिणीतितश्च ।
चक्रेऽर्थकामावपि धर्ममेवेत्याः कालिदासादपरो वदेत् कः ॥३॥

शकुन्तलादर्शनलुप्तधैर्यं दुष्यन्तमत्यन्तमुदीर्य तस्याः ।
विवाहयोग्यत्वविमर्शनिष्ठं कोऽन्यः कविः कर्तुममुं क्षमेत ॥ ४ ॥

यज्ञे पशूनां विनियोजनस्य भूतानुकम्पातिशयस्य चास्ति ।
विरोध गन्धोऽपि न, तत्त्वमेतदकालिदासोऽभिदधीत कःस्वित् ॥

अश्वोस्तु गौरस्तु यदात्मरक्ष्यं रक्ष्यं नृपैस्तत् स्ववपुर्व्ययेऽपि ।
इतीदमुर्वीश्वरकार्यसौक्ष्म्यं को नः कविर्ग्राहयितुं क्षमोऽन्यः ॥

यत्रास्ति यः कोऽपि न चोरवृत्तिर्यत्रास्ति यः कोऽपि न बन्धनस्थः ।
तदुत्तमं राज्यमितीममर्थं जग्राह धीः कस्य कवेः परस्य ॥

अन्योन्यसम्पत्परिवर्तनेन नृपेण शक्रेण च संविधेयम् ॥
लोकद्वयस्यावनमित्युदारं शास्त्रार्थमत्राह कविः परः कः ॥ ८ ॥

अकालिदासोदितकाव्यबन्धे द्रष्टुं क्व शक्यावभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिस्स्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ९ ॥

धर्मस्य तत्त्वं निहितं गुहायां यः सर्वदृष्टेर्विषयं चकार ।
तं कालिदासं विरहय्य मन्तुमन्यं कविं नोत्सहते मनो मे ॥१०॥

वेदान्तचिन्तां विपुलां करोमि मीमांसने मग्नमनोरथोऽस्मि ।
तथापि मे तस्य गिरो वलन्ते भावे सदाऽहो बलवान् कवीन्द्रः ॥

---

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

S. T. G. VARADACHARY, *Chittiguduru, Masulipattam*

ललितामेव वितन्वन् सृष्टिं स्रष्टारमप्यतिशयानः ।
औचित्या मूर्तिर्मे भजनीयः कालिदास त्वम् ॥ १ ॥

काष्ठं रम्यतरुः शिला च महिला लोष्टस्तथा काञ्चनं
कुड्यं चित्रमयं तृणं च मधुरं खाद्यं त्वया साधितम् ।
अर्थं दुर्भगनीरसं कृतवतो लोकोत्तरं लीलया
माया शिल्पमथापि योगमहिमा किं खल्विदं स्यात्तव ॥ २ ॥

प्रीत्यै नातिशयोक्तिरस्ति भवतो रम्यस्वभावोक्तिवत्
स्वाभाव्येन हि वर्णितं पुरत एवोपस्थितं स्यान्मुदे ।
नन्दिन्याः परिपालनस्य कथिता अंशा यथालौकिकं
प्रीणन्त्येव सचेतसं प्रतिभया नीतास्त्वया रम्यताम् ॥ ३ ॥

विज्ञैस्तत्त्वमुदीर्यते हि विदितं साधर्म्यवैधर्म्यतो
गूढं वस्तुषु साम्यमीक्षितुमलंभूतो भवांस्तत्त्ववित् ।
संग्रथ्नन्नुपमामनन्यसुलभां विज्ञान् यथा पामरा-
नानन्दं गमयन् परं निरुपमस्त्वं सोपमश्चाप्यसि ॥ ४ ॥

काव्यज्ञा विबुधा वदन्तु बहुधा काव्यस्य यल्लक्षणम्
शब्दार्थाविति शब्दमात्रमिति च त्वं मन्यसेऽर्थं तु तत् ।
आनन्दादिबहुप्रयोजनवतोऽर्थस्य स्वतोऽसंभवात्
शब्दो द्वारतया श्रितो हि भवता पारार्थ्यमापाद्यते ॥ ५ ॥

क्वचित्सालंकारः सरलसरणिः क्वापि विकटः
कठोरः क्वापि स्यात्क्वचन मृदुरप्यर्थवशतः ।
त्वदीयः शब्दो न क्वचन विजहात्यात्मसहजं
प्रसादं नैदाघं जलमिव सतां बुद्धिरिव च ॥ ६ ॥


CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

पश्यत्येव कविस्तमर्थमपि यं नेष्टे रविर्वीक्षितुं
नास्त्यर्थः स हि यो धियो न विषयो वाचश्च ते सत्कवेः ।
वर्ण्यं स्याज्जननं मृतिश्च मृगया युद्धं दिनादिर्ऋतुः
जल्पो दैवनुतिः स्वयंवर इदं सर्वान् समावर्जयेत् ॥ ७ ॥

त्वद्वर्ण्या रघुवंशजा इव मितं सत्याय संभाषसे ।
काव्यार्थश्च शकुन्तलेव मधुरः सर्वेण वेषेण ते ।
आत्मानं विनिगृह्य तापस इव प्रच्छन्नशक्तिर्भवान्
त्वय्येकत्र गुणा अमी कृतिषु ये भिन्नास्पदा दर्शिताः ॥ ८ ॥

वाल्मीकेस्तनयोऽसि काव्यकरणे; तस्माद्यदासादितं
रिक्थं भूरि तदात्मशक्तियतनैः स्वर्णाद्रिसारं कृतम् ।
त्वत्पुत्रा गततेजसस्समभवंस्तुष्टास्तु पित्र्यैर्धनैः
प्रायस्स्याद् गतिरीदृशी जनिमतां लोकाधिकेभ्यो भुवि ॥ ९ ॥

ईप्सार्थस्य भवेन्नृणां समधिका कामस्य लिप्सापि वा
धर्मस्यास्त्वथवा समाचिचरिषाऽऽदित्सापवर्गस्य वा ।
शब्दब्रह्मविदं भवन्तमुपसृत्यावाप्नुवन्त्येव तं
नाङ्गीकुर्युरिदं तु मूढमतयः त्वं कल्पवृक्षो मम ॥ १० ॥

सूक्तिः श्रीकालिदासस्य वर्धतामभिवर्धताम् ।
तत्प्रियो भावुकश्चापि वर्धतामभिवर्धताम् ॥ ११ ॥

श्रीकालिदासप्रतिभाममेयामुद्दिश्य मेयप्रतिभैर्न वाच्यम् ।
एतद्विदित्वापि सभानियोगाद्यत्किञ्चिदुक्तं वरदस्य सह्यम् ॥

---

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


*Vidwan* A. VENKATACHARYA
*Chidambaram*

न जाने कवीन्द्रान् न वा काव्यकारान्
न वा नाटकादिप्रबन्धप्रणेतॄन् ।
न वाष्टावधानप्रवीणान् नवीनान्
सदा कालिदासं कविं भावयेऽहम् ॥ १ ॥

कवेर्नास्ति जातिर्नवा काव्यसृष्ट्या
कविर्जायते कृष्यमाणैः पदैर्वा ।
कविस्स्मर्यमाणक्षणे यस्य पद्यं
सुधापूरसारं सदोति सोऽयम् ॥ २ ॥

क्षितौ वारिधारास्रवन्त्यप्यदृश्या
प्रयत्नान्नराणां झरी जायते च ।
कवेरप्यनन्तेषु सक्तस्य कार्ये-
ष्वविच्छिन्नधारा कृतिर्गाङ्गतुल्या ॥ ३ ॥

पुरा सृष्टिकाले स्वयंभूमुखास्ते
बभूवुर्महामेधया लब्धवर्णाः ।
न तेषां कवित्वप्रथा भाति चित्रं
यथा कालिदासे कवित्वप्रथास्ति ॥ ४ ॥

कवीनां महत्त्वे कवित्वं निदानं
न चांगीकृतं प्रायशः पूर्वकाले ।
सुवृत्तिर्महत्त्वस्य हेतुस्तथा चेत्
तदा मल्लिनाथेन सत्यं कवीन्द्रः ॥ ५ ॥

कविः कालिदासः कदाचित् प्रणेतुं
क्रमं प्राप नैवेति पश्याम एव ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

यतः कालिदासः क्षणान्निर्मिमीते
रसास्वादचारूणि पद्यानि तूर्णम् ॥ ६ ॥

व्यतानीन्महर्षिस्तु रामायणं प्राक्
ततानाथ च स्कान्दमन्यो महर्षिः ।
सुदुर्बोधमेतद् द्वयं कालिदासः
सुधास्वादकन्दैस्स्वपद्यैर्लिलेख ॥ ७ ॥

रघूत्तंसवंशं लिलेखोत्तमांशं
कुमारस्य संभूतिमाहातिभूतिम् ।
महामेधया मेघसन्देशकाव्यम्
समानं त्रयाणां त्रयं वा तदीयम् ॥ ८ ॥

---

## सौन्दर्यदेवः कालिदासः

V. S. VENKATA RAGHAVACHARYA
*Hony. Secretary, Samskrit Academy*

कान्तोपमेयां कवितां वदन्तो
व्याचक्षते तामुपदेशदक्षाम् ।
कान्तेव रम्या कविता मनोज्ञं
भोग्या रसज्ञैरिति मे मनीषा ॥ १ ॥

श्रीकालिदासप्रतिभाऽसमाना
काव्यात्मनासादितचारुरूपा ।
कालातियानेऽप्यजहत्सुगन्धा
प्रीणाति नः केसरमालिकेव ॥ २ ॥

सौन्दर्यजुष्टं किल वस्तुजातं
प्रमोददं प्राह कविः प्रतीच्यः ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

विजानतानेन तु वस्तुसारं
तदेव सौन्दर्यमुपासितं हि ॥ ३ ॥

रम्येषु वस्तुष्वपि कामिनीभिः
तुल्यं न किञ्चिद् हृदयापहारि ।
ततस्स्वकाव्येषु कवीश्वरोऽयं
स्त्रीरूपमेव प्रथयाञ्चकार ॥ ४ ॥

प्रतिक्षणं पुष्यदमन्दशोभा
सदोपभुक्तापि च यौवनेद्धा ।
विभाति नूनं कवितावधूटी
सुराङ्गना ऽऽसेचनदर्शनेव ॥ ५ ॥

रम्यैर्वचोभिः कुटिलालकाभै-
र्भावं निजं व्यञ्जनया दिशन्ती ।
लोकज्ञतायां कुशलास्य वाणी
मनोहरा चोलविलासिनीव ॥ ६ ॥

संश्लिष्टवक्षोजयुगाभिरामा
यथान्ध्ररामा चिरभोगदक्षा ।
सुश्लिष्टवागर्थविशेषकान्ता
क्षोदक्षमा नूनममुष्य सृष्टिः ॥ ७ ॥

सदावदातोज्ज्वलचारुदेहा
नात्यादृतालंकरणापि रम्या ।
चेतो हि नस्तोषयतेऽस्य काव्या
वामा प्रगल्भेव च केरळीया ॥ ८ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

'जनः प्रपञ्चे किल मर्त्यधर्मा
   जीवन् पुनस्सौख्यशतानि विन्देत् ।
नात्मोपरोध्यो बहुचिन्तनाभिः'
   सुधीरयं सन्दिशतीह चास्मान् ॥ ९ ॥

दत्तां सुशिष्ये सफलां प्रशंस-
   न्नवस्तुदत्तामफलां विनिन्दन् ।
विगर्हयन् पण्यधियं कवीन्द्रो
   ह्याचार्यकं स्वाभिमतं व्यनक्ति ॥ १० ॥

प्रेम्णा शरीरार्धहरोऽपि देव्यै
   यत्यग्रणीर्नूनमुमासहायः ।
शृङ्गारसन्दर्भविशेषमज्ञो
   नायं कविर्धूर्ततरो विगण्यः ॥ ११ ॥

रसेषु सत्स्वप्यपरेषु, रस्यं
   शृङ्गारमेवाद्रियते कवीन्द्रः ।
सन्त्येव चान्ये कवयो जगत्यां
   तथाप्यमुष्मिन् मम पक्षपातः ॥ १२ ॥

लीलार्थमेवं विनुवन् कवीशं
   नार्हत्ययं पर्यनुयोगनिन्दे ।
कर्णन्तुदामारटनां वितन्वन्
   तुष्टिं परामृच्छति वायसोऽपि ॥ १३ ॥

———

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

Dr. G. V. SITAPATY
*Chief Compiler, Telugu Encyclopedia*

येनेयं देववाणी कविकुलपतिता साहितीसिद्धहस्ता
यस्यार्थं भारतीयाः सकलपरिषदां सर्वदा माननीयाः ।
आचन्द्रार्कं प्रसिद्धा विलसति बहुधा यस्य कीर्तिर्विशुद्धा
वन्दे तं कालिदासं नवरसललितं काव्यकान्ताविलासम् ॥ १ ॥

विख्यातिस्ते रघुकुलकथाकाव्यशय्यासु जाता
वैदुष्यं ते लसति नितरां स्कन्दजन्मप्रबन्धे ।
मन्द्राक्रान्तामधुरकविता मेघदूते मनोज्ञा
प्रख्याता ते चतुररचना नाटकैः कालिदास ! ॥ २ ॥

सानन्दं रघुवंशकाव्यपठनं बाल्ये वयं कुर्महे
सम्मोदेन कुमारसम्भवमहो कौमारकेऽधीमहे ।
अस्माभिः खलु मेघदूतरचनं गेयं भवेद् यौवने
तत्त्वज्ञास्तव नाटकाभ्यसनसंसक्ता वयं वार्धके ॥ ३ ॥

अभिज्ञानशाकुन्तलं ते प्रशस्तम्
पृथिव्यां कवीनां लसन्नाटकेषु ।
यतस्तस्य सर्वत्र भाषानुवादाः
कवीन्द्रैः कृता भूयसा कालिदास ! ॥ ४ ॥

सर्वेशो मे गुरुकरुणया सुप्रसन्नो यदि स्या-
न्नाहं याचे सुरपतिमहाराज्यभोगं कदाचित् ।
नाहं याचे दिविजवनिताभोगसौख्यन्तु किञ्चित्
याचे शक्तिं रसयितुमहं कालिदासप्रबन्धम् ॥ ५ ॥

---

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

B. K. SRINIVASACHARYULU
*Department of Telugu Encyclopedia*

कालिदासकविता सुधानिधौ
नावगाह्य सुखमाप्नुवन् जनः ।
जन्मलाभफलवञ्चितो ध्रुवम्
सोऽस्तु भूभृदथवाऽऽगमान्तवित् ॥ १ ॥

उपमारचनेऽतिकोविदो-
प्युपमानिर्विषयो महाकविः ।
कृतधीरपि यः प्रसूतवान्
रसकुल्यारुचिरामधीकृताम् ॥ २ ॥

वियति भुवि च शोभां संपुटीकृत्य सर्वाम्
तुलयत सुहृदस्तां कालिदासस्य वाग्भिः ।
कविवचनमहत्ता ज्ञायते वस्तदानीम्
ननु रसमयसृष्टिर्धातृसृष्टेर्विशिष्टा ॥ ३ ॥

रम्याकृतीनां न हि देशकालौ
त्रिकालसंशोभि कवीन्दुरोचिः ।
यावद्दिशां नेत्रयुगे प्रकाशः
रस्येत तावद्भुवि कालिदासः ॥ ४ ॥

बकुलसुरभिलाः कामाद्यखिलरुजाक्षेपकाः प्रमोदशिखाः ।
श्रीकालिदासवाचो जयन्ति वाणीश्रवःकुरवकास्ताः ॥ ५ ॥

---

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


T. CHANDRASEKHARAN
*Curator, Oriental Manuscripts Library, Madras.*

उमाकान्ते रमाकान्ते सरस्वत्याश्च भर्तरि ।
सामान्यप्रतिपत्त्या यो भेदाभावस्य देशिकः ॥ १ ॥

आहिमाचलमालङ्कमापयोधित्रयं तथा ।
आत्रिविष्टपपातालं भारतो येन वर्णितः ॥ २ ॥

कालिदासस्य काव्येषु तस्य सारस्वतं महत् ।
रसिकैर्विबुधैर्नित्यं चर्वितं किञ्चिदुच्यते ॥ ३ ॥

पर्वते वा समुद्रे वा प्रासादे वा तपोवने ।
कानने राजधान्यां वा पाताले वा सुरालये ॥ ४ ॥

विवाहे वा विलापे वा मृगयायां च पालने ।
पामरे वा महर्षौ वा वयोवृद्धे च बालके ॥ ५ ॥

धनिके वा दरिद्रे वा मनुष्ये वा मृगेऽपि वा ।
युद्धे वा दुष्टसंहारे धर्मस्य परिपालने ॥ ६ ॥

विप्रलम्भे च शृङ्गारे सम्भोगे वा मनोहरे ।
कथायास्सङ्ग्रहे वापि तथा विस्तृतयोजने ॥ ७ ॥

एवमादिषु भावेषु विरुद्धेषु परस्परम् ।
अनन्यसदृशी शैली कालिदासस्य वर्णने ॥ ८ ॥

मनोज्ञा रम्यभावा च द्राक्षापाकसमन्विता ।
वैदर्भीरीतिमाश्रित्य रचिता कोमलाक्षरा ॥ ९ ॥

जयतु जयतु नित्यं देववाणीप्रभावः
जयतु जयतु नित्यं कालिदासस्य कीर्तिः ।
जयतु नियतमित्थं तत्कृतिष्वादरो नः
भवतु सततमेवं सर्वदेशेषु शान्तिः ॥ १० ॥

---

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

## M. P. SARALAYA

*Mylapore.*

आनन्दं चन्द्रिकेयं जनयति नितरां हन्त ! सत्यं परन्तु
प्राप्तायां पूर्णिमायां, जलजमपि दिने , नर्मकाले च कान्ता ।
वृक्षच्छाया निदाघे, सुहृदपि विपदीत्येवमालोच्य सर्वं
निःसन्देहं प्रवक्ष्येऽनुदिनसुखकरी कालिदासीयमेधा ॥ १ ॥

भास्वत्यस्मिन् गभस्तीः कलयति सकला दीपखद्योततारा-
श्चन्द्रो विद्युल्लताद्याः परिहतरुचयो बिभ्रते चित्रशोभाम् ।
तद्वच्छ्रीकालिदासे कवयति मधुरं भासदिङ्नागमाघाः
श्रीहर्षो बाणभट्टाद्यखिलकविवरा नीरुचो मूकभावम् ॥ २ ॥

भृङ्गा गुञ्जन्तु मञ्जु क्वणतु च मशको नीलकण्ठश्च रम्यं
भेकास्तालप्रबद्धं मधुरतरमहो ! कुर्वतां गायनं तु ।
सङ्गीतिः केति पृष्टे प्रतिवचनमिदं कोकिलालापगीतिः
तद्वत्पृष्टे सुकाव्ये प्रतिवदति जनः कालिदासीयकाव्यम् ॥ ३ ॥

---

## VIDYADHARA SASTRI

*Bikaner*

कस्मिन् पदे न प्रतिभा विशाला श्रीकालिदासस्य कृतौ विभाति ।
का सा कला पूर्णसुधाकरस्य काचित्सुधां वर्षति नैव चान्या ॥ १ ॥

कुमुद्वती भानुमता न भाति सरोजिनी हृष्यति नेन्दुना च ।
यां यां कलां प्रेक्षत कालिदासः सा सैव तस्याभिमुखी बभूव ॥ २ ॥

श्रीकालिदासस्य कवेः कलैषा यया नवां कान्तिमुपैति कान्तिः ।
स्पृष्टं च यत्तेन सकृत् क्वचित्तत् कं कं न पूर्णं स्वविकासमाप्नोत् ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust


स चित्रकारः स कविर्विधाता गाता च यस्याः स महान् बभूव ।
तस्या हि सद्भारतसंस्कृतेः स विभाति कश्चिद् हृदयावतारः ॥ ४ ॥

व्यासस्य नीतिर्विबुदर्शनञ्च सा सुव्यवस्थाऽऽदिकवेश्च धर्म्या ।
सर्वं हि संभूय रसत्वमाप्तं श्रीकालिदासात् वहति प्रसन्नम् ॥ ५ ॥

---

## संस्कृतसेवासमितिप्रशस्तिः

V. H. SUBRAHMANYA SASTRI

सारस्वतं समधिकं परिवर्धयन्ती
सन्तापभारमचिरान्मनसो हरन्ती ।
अन्तस्तमोनिवहमाशु विशोषयन्ती
सेवासभा लसति शारदचन्द्रिकेव ॥

माध्वीझरीव मधुरैर्महितैर्वचोभिः
सेव्यस्सदापि सकलैः कविसार्वभौमः ।
कस्यान्तरेण विदितः प्रथितोऽनया हि
सञ्चाल्यमानमहदुत्सववैभवेन ॥

---

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized by eGangotri Trust

*Compositions have also been received jrom th following scholars.*

1. Sri Y. V. Devaskar, Baroda
2. Sri Karamalkar Sastri, Indore
3. Sri Krishnan Namputiri, Karikkat
4. Sri D. M. Kulkarni, Satara
5. Sri R. Rajagopala Sarma, Bangalore
6. Sri R. Ramamurti, Mylapore
7. Sri V. Ramanujam, Madurantakam
8. Sri Sarabheswara Sarma, Madras
9. Sri M. L. N. Sarma, Bellary
10. Sri T. N. Subrahmanya Sarma, Pudukkottai
11. Sri Viswanatha Kesava chatre, Kalyan

CC-0. Prof. Satya Vrat Shastri Collection.

